॥ श्री ॥
अथ श्री त्रिविक्रमपंडिताचार्यसुत श्री नारायणपंडिताचार्यविरचितः
॥ श्री मध्वविजयः ॥
५. पंचमः सर्गः
वेदांतविद्यानिजराज्यपालने संकल्प्यमानो गुरुणा गरीयसि ।
अदभ्रचेता अभिषिच्यते पुरा स वारिभिर्वारिजपूरितैरथ ॥ ५.१ ॥

आनंदरूपस्य परस्य पात्र धीः आनंदसंदायिसुशास्त्रकृत् स यत् ।
आनंदतीर्थेति पदं गुरूदितं बभूव तस्यात्यनुरूप रूपकम् ॥ ५.२ ॥

कदाचिदत्रोपययौ यतिः सखा गोविंदबुद्धेर्बहुशिष्यसंवृतः
अमुष्य शिष्या अनुमानशिक्षिताः तदाऽजिगीषन् गुरुबुद्धिमुद्धताः ॥ ५.३ ॥

भिदा सुसाध्येत्यनुमानमत्र तैः प्रायुज्यताऽशु प्रतिपक्षभीषणम्
अखंडयद् व्यक्तमखंड धीरिदं स पक्षदक्षः फणिनं विराडिव ॥ ५.४ ॥

अथापि मिथ्या विमतं मतत्वतो विवाद निर्मुक्त वदित्यवादि तैः ।
अनेन सत्यं विमतं मतत्वतो यथा घटादीत्यनुमा न्यगद्यत ॥ ५.५ ॥

हेतोरतिव्याप्तिरवादि तैर्यदा सकौतुकैस्तूर्णमसाववविस्मयः ।
न शुक्तिरूप्यादि मतं यदन्यथा मतं तदित्यादि वदन् जिगाय तान् ॥ ५.६ ॥

तत्त्वेऽप्यतत्त्वे विमतेऽनुमां वदन् तदप्रतिष्ठां प्रतिपादुकः स्वयम् ।
विजित्य विश्वान् विदूषं सभास्वसौ जगाम नाम्नाऽप्यनु मान तीर्थताम् ॥ ५.७ ॥

समस्तवादींद्रगजप्रभंगदः चरन्नवन्यां प्रतिपक्षकांक्षया ।
वेदद्विषां यः प्रथमः समाययौ स वादिसिंहोऽत्र सबुद्धिसागरः ॥ ५.८ ॥

तस्योरुदुर्गर्ववतो जिगीषया निशातमादत्त मुकुंदधीर्द्रुतम् ।
स्वशिष्यहस्तेन मठांतरेषुधेः सुपक्षदक्षं सुखतीर्थमार्गणम् ॥ ५.९ ॥

जैत्रं प्रजिज्ञासु कुतूहलाकुलं नृणां कुलं प्रत्वरितं निशामयन् ।
अवंदतोपेत्य गुरुं गरिष्ठधीः स रूप्यपीठायतनोत्तमस्थितम् ॥ ५.१० ॥

स वादिसिंहस्य गिरं गरीयसीं अखंडयत् पंडितमंडलांतरे ।
तीक्ष्णेन वाक्येन मितेन वेगिना गदां शरेणेव विशारदो मुहुः ॥ ५.११ ॥

असावसूयन् द्विनवप्रकारतो व्यचीक्लृ पत् कंचिदथार्थमुच्चकैः ।
जगद्विजेतुश्च जये ससंशयः तावज्जनोऽजायत पूर्णचेतसः ॥ ५.१२ ॥

विकल्पकोटीरथ खंडयन् द्रुतं रेजेऽधिकं स्मेरमुखो बृहन्मतिः ।
तमस्ततीर्वा द्युमणिर्विशुद्धया गवा श्रितो विष्णुपदं सदास्पदम् ॥ ५.१३ ॥

अगाधमात्मन्यतिवेलमुद्धतं तिरस्कृताशेषसरस्वतीततिम् ।
कामं महामानसकुंभसंभवो लघूचकारेत्यपि बुद्धिसागरम् ॥ ५.१४ ॥

श्व ऐव वादोऽस्त्विवति वादिनौ खलौ अद्योत्तरं भाति यदीर्यतामिति ।
मध्वे ब्रुवाणेऽमत तौ जितौ जनः स निश्चिकायापि निशापलायनात् ॥ ५.१५ ॥

बुद्ध्यब्धिना वादिवरेण चाऽर्जितां जयश्रियं भूपरिवर्तिना चिरात् ।
अहो मुहूर्तादयमप्रयत्नवान् अवाप्तवानित्यतिविस्मितं जनैः ॥ ५.१६ ॥

व्याख्यान् कदाचिन्मणिमद्विनिर्मितं भाष्यं जनैस्तर्कविशारदैर्वृतः ।
उवाच वाचं परिहासहासवान् सम्मोदतीर्थः सुरमोददायिनीम् ॥ ५.१७ ॥

सत्सूत्रभावे प्रविचारिते पृथग् भाष्याभिसंधौ च विशुद्धबुद्धिभिः ।
निगृह्य गूढाग्रहमुग्रमेतयोः मान्योऽन्वयोऽन्योन्यमहो न दृश्यते ॥ ५.१८ ॥

इति ब्रुवाणे प्रतिपादयत्यलं भाष्येऽत्र दोषान् प्रबलान् मुहुर्मुहुः ।
तस्मिंस्तु विस्मेरधियोऽपि यत्नतो न स्थेयसः पर्यहरन्निमानमी ॥ ५.१९ ॥

नन्वस्य सूत्रस्य परोऽर्थ उच्यतां यद् भाष्यमात्रं भवता निरस्यते ।

भवादृशैर्यः कविभिर्न दूष्यते कथंचनेत्यूचुरिमे वचस्विनः ॥ ५.२० ॥

अक्लिष्टशब्दान्वयमेष संभवत् सूत्रार्थमुच्चैर्वचनं तदाऽऽददे ।
मानीकृताम्नाययुतस्मृति क्षणाद् ऐष्यत्कथा तांडवसूत्रधारकम् ॥ ५.२१ ॥

बुभुत्सया मत्सरवर्जितान् जनान् समत्सरान् वा विजिगीषयाऽऽगतान् ।
श्रुतप्रवीणाननितितार्किकान् मुहुः भंग्याऽनया भंगमुपानिनाय सः ॥ ५.२२ ॥
कदाचिदेनं प्रतिगम्य सौम्यधीः स मध्यगेहार्यवरः प्रसेदिवान् ।
हेतोः कुतश्चिद् विमनीकृतोऽप्यहो गुणाब्धिलुब्धः सुजनः प्रसीदति ॥ ५.२३ ॥

तेजोऽमृतं नंदनगात्रपात्रगं नेत्रांजलिभ्यामपिबत् सदाऽव्ययम् ।
विद्यासुधां चास्य वचोमहाघटे पूर्णामसौ कर्णपुटेन पंडितः ॥ ५.२४ ॥

लीलाविवादे गुरुणा जगद्गुरोः प्रसंगतस्तत्र च तादृशे सति ।
सूत्रार्थविच्चेत् कुरु भाष्यमंजसे त्याक्षेपपूर्वं गुरुरभ्यधादिमम् ॥ ५.२५ ॥

विधानमात्रं तदुपाददे तदा पयो यथाऽच्छं परमः स हंसराट् ।
तल्लीनमाक्षेपमुपैक्षताफलं वारीव संतो हि गुणांशतोषिणः ॥ ५.२६ ॥

वैराग्यवैयात्यसुवाक्त्वपूर्वकैः युतो गुणैः पारमहंस्यभूषणैः ।
ज्येष्ठो यतिर्यो लिकुचान्वयोद्भवः तं भूरिभक्तिः स कदाचिदब्रवीत् ॥ ५.२७ ॥

विरोधि वेदांतकृतांतसंपदां भाष्यादिकं चेदिदमस्तु का क्षतिः ।
अस्मभ्यमाचक्ष्व विचक्षणोचितं भावं तु सूत्रोपनिषद्विवक्षितम् ॥ ५.२८ ॥

इत्यस्य वाचा शरदेव भासिता यदाऽखिलाशाः शुभपूर्णया बभौ ।
प्रमोदतीर्थाननचंद्रचंद्रिका व्याख्याभिधा विष्णुपदप्रकाशिनी ॥ ५.२९ ॥

जेष्यन् कदाचित् किल कालपालितां दिशं प्रयातोऽच्युतबुद्धिना सह ।
समग्रधीर्मंडितविष्णुमंगलं विष्णुं जगन्मंगलमाननाम सः ॥ ५.३० ॥

भिक्षाप्रदात्राऽत्र परीक्षितुं मुहुः दत्ते प्रभुक्ते कदळीफलोच्चये ।
अनेन निर्यत्नमवार्यविस्मयः तमार्यवर्यं विजनेऽवदद् गुरुः ॥ ५.३१ ॥

भिक्षावसाने द्विशताधिकैः फलैः व्यूढैः प्रभुक्तैः परिपूरितेऽपि ते ।
तनूदरे नास्ति गरिष्ठता कथं सुचित्त सत्यं वदताद् भवानिति ॥ ५.३२ ॥

अंगुष्ठमात्रं जठरप्रतिष्ठितं जाज्वल्यमानं मम जातवेदसम् ।
नित्यं हितं विश्वदहं च वित्त तं विश्वेशचेता इति सोऽब्रवीत् तदा ॥ ५.३३ ॥

पर्याकुलानेकसरस्वतीततीन् न्यायोपपन्नान् विविधार्थसंयुतान् ।
अतीत्य देशान् समयांश्च चारुधीः असौ जगामाभिमतेन वर्त्मना ॥ ५.३४ ॥

स्वहेळया पातितपार्थिवव्रजां धीशुद्धिदां केरळभूषणायिताम् ।
पयस्विनीं प्रेक्ष्य पथि द्विजार्चितां स भाविनीमस्मरदत्र चंडिकाम् ॥ ५.३५ ॥

ततः क्रमेण प्रचलन्नुपेयिवान् अवंदतेंदीवरसुंदरच्छविम् ।
अंभोजनाभं स भुजंगशायिनं श्रीवल्लभं श्रीमदनंतसत्पुरे ॥ ५.३६ ॥

वेदांतसूत्राणि कृतांतवित्तमो व्याख्यादसौ शिष्यगणाय संसदि ।
विलक्षणं जीवगणाद् गुणार्णवं ब्रह्माच्युताख्यं प्रतिपादयन् मुहुः ॥ ५.३७ ॥

अप्रांशुनूत्नोपपदाधिवासजः स संकरो वैरपरायणः पुनः ।
असूययोचेऽत्र महानतिक्रमः सूत्रार्थ वादोऽकृतभाष्यकेश्चिति ॥ ५.३८ ॥

वदोत्तरं भाति यदीह कुर्महे भाष्यं कृतिर्नास्य हि दंडवारिता ।
जगद्गुरूणामिति तां गुरोर्गिरं जनः समस्तोऽभिननंद सस्मिताम् ॥ ५.३९ ॥

प्राज्ञैर्महापूरुषसर्वलक्षणैः संपन्नदेहोऽयमितीरिते प्रभौ ।
परे परस्याप्यतिपीनतादृशः स्फिङ्मात्रसंशंसनमेव चक्रिरे ॥ ५.४० ॥

स्फिग्दूषणानि प्रतिपादयत्यलं संपूर्णसंख्येऽस्य तु लक्ष्मशास्त्रतः ।

तद्दंडसंखंडनसंश्रवं व्यधात् तदक्षमोऽसौ प्रकृतिर्हि साऽसताम् ॥ ५.४१ ॥
स्
नात्वाऽत्र तीर्थेष्वचिरेण कन्यकातीर्थे सुतीर्थे सुखतीर्थ आप्लुतः ।
समुद्रसेतौ च निमज्य विष्णवे श्रीरामनाथाय नमाश्चकार सः ॥ ५.४२ ॥

तमाव्रजंतं यतिवेषधारिणं दंडं प्रकाश्यैष हसन्नभाषत ।
खंड्येत दंडो यदि चंड न त्वया त्वं पंडकोऽपंडित वंध्यवागिति ॥ ५.४३ ॥

लज्जानतः स्वार्थमथार्थयन्नसन् उपैक्ष्यतासौ द्विजनायकैस्तदा ।
आनंदयंतं वदनेंदुना जगत् तं द्वेष्टि कः प्राज्ञमिहेति वादिभिः ॥ ५.४४ ॥

यायाः प्रसक्ताः परिषत्सु पूरुषैः विद्या विदग्धैर्विविधैः समागमे ।
स तासुतासु प्रतिभातिभासुरो विद्यासु विद्याधिपतिर्जिगाय तान् ॥ ५.४५ ॥

अचाल्यमानः सगुरुः स चापलैः असज्जनानामबलीयसामिह ।
उवास मासांश्चतुरो महामनाः सिंहो गुहांतोपगतः शुनामिव ॥ ५.४६ ॥

शृंगारसिंधुं स भुजंगशायिनं श्रीरंगवासं कृतमंगलं सताम् ।
अमंदधीर्देवमवंदताऽगतः कवेरकन्याहिमवायुसेवितम् ॥ ५.४७ ॥

ततो निवृत्तः परमेव पूरुषं प्रणम्य नानायतनेषु संचरन् ।
प्रकाशयन् स्वातिशयानमानुषान् आशामुदीचीं प्रययावसौ क्रमात् ॥ ५.४८ ॥

ततस्ततो विस्मितलोचनैर्नरैः निरीक्ष्यमाणोऽतिसुलक्षणाकृतिः ।
ग्रामोत्तमान् प्राप्य पयस्विनीतटे विवेश देवायतनं स किंचन ॥ ५.४९ ॥

अधीत्य धर्मेण षडंगमागमं तदर्थसंवर्णननिर्णयान्विताः ।
प्रापुर्द्विजेंद्रास्तमपूर्वपूरुषं जिज्ञासवः सुप्रथितं जगत्त्रये ॥ ५.५० ॥

सुस्मितेन्दुमरविन्दलोचनं स्वर्णवर्णमतिभद्रभाशणम् ।
वीतभूशमपि विश्वभूशणंतं दिड्क्शुरलमापतज्जनः ॥ ५.५१ ॥

विद्योरुद्युतिधीरतारकतिरस्कारे पतंगायितो
दुर्वादीभकुतर्ककुंभदलने सिंहप्रबर्हायितः ।
लोलालोककलोकदृक्कुमुदिनी संह्लादनेऽब्जायितः
संसन्मंडलमंडनायित उत स्वानंदतीर्थो बभौ ॥ ५.५२ ॥

॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत
नारायणपंडिताचार्यविरचिते श्रीमध्वविजये
आनंदांकिते पंचमः सर्गः ॥